આભાર માનું છું. પ્રો. અતિસુખશંકર કમળાશંકર ત્રિવેદી, પ્રો. વિષ્ણુપ્રસાદ રણછોડભાઈ ત્રિવેદી, પ્રો. મોહનલાલ પાર્વતીશંકર દવે, રા. રા. ગવસાહેબ ઇશ્વરલાલ પ્રાણલાલ ખાનસાહેબ, પ્રો. સોમેશચંદ્ર જનાર્દન પાઠકજી, શ્રી. બીજરતનલાલ અકડ વિગેરેનો અને તેમને અર્પેલ પ્રોત્સાહન માટે, શ્રી૦ મુળજીભાઈ જેઠાભાઇ અંજારીયાનો ગુજરાતી પ્રુફ તપાસવામા મહત્વ કંઇક મદદ કરવા માટે તેમજ સાર્વજનિક કોલેજના વાઇસ પ્રિન્સિપલ રા. કમળાશંકર સુંદરલાલ ત્રિવેદીનો સંસ્કૃતના મર્યાંશે પ્રુફ તપાસવા માટે અત્રે મહત્વ ઉપકાર માનુ છું

'અનાવિલ-બંધુ' પ્રેસના સંચાલક અને મેનેજર સ્નેહી ભાઇ ગોવિંદલાલે પણ જે ચોકસાઇથી અને ઝડપથી છાપવાનું કામ કરી આપ્યું છે, તેને માટે તેમનો અને બુકસેલર કરસનદાસ નારણદાસની પેઢીના ભાઈ બાલુભાઇએ તથા નવનીતલાલે પણ કેટલીક અમૂલ્ય સૂચનાઓ આપી તેને માટે તેમનો પણ અત્રે આભાર માનું છું.

ઉપલકીયા દૃષ્ટિથી નહિ, પણ વિવેક ને વિચાર-પુરઃસર દૃષ્ટિએ આ અનુવાદ પર શિષ્ટજનો કૃપાકટાક્ષ ફેંકી ઘટિત ન્યાય આપશે એવી આશાપૂર્વક અને અંતમાં ઉતાવળથી કામ લેવાના સબબે રહી ગયેલી છાપ-ભૂલોને માટે વાચકવર્ગની ક્ષમા યાચી બીજી આવૃત્તિ કઢાવવાનુ સદ્‌ભાગ્ય થાય તો તેવે પ્રસંગે ફળ-દાયક કંઈક સૂચનાની શિષ્ટ જનો પાસે ભીક્ષાની યાચનાપૂર્વક અત્રે પુસ્તકની પ્રસ્તાવનાની પૂર્ણાહુતિ માગું છું.

નાણાવટ, પડાગની પોળ, સુરત તા. ૧-૩-૨૭ — નટવરલાલ રણછોડદાસ શાહ




श्रीः॥

श्रीजयदेवकविविरचित

# गीतगोविन्दकाव्यम् ।

## प्रस्तावना ।

मेघैर्मेदुरमम्बरं वनभुवः श्यामास्तमालद्रुमै—
नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय ।
इत्थं नन्दनिदेशतश्चलितयोः प्रत्यध्वकुञ्जद्रुमं
राधामाधवयोर्जयन्ति यमुनाकूले रहःकेलयः ॥ १ ॥

वाग्देवताचरितचित्रितचित्तसद्मा
पद्मावतीचरणचारणचक्रवर्ती ।
श्रीवासुदेवरतिकेलिकथासमेत—
मेतं करोति जयदेवकविः प्रबन्धम् ॥ २ ॥

यदि हरिस्मरणे सरसं मनो यदि विलासकलासु कुतूहलम् ।
मधुरकोमलकान्तपदावलीं शृणु तदा जयदेवसरस्वतीम् ॥ ३ ॥

वाचः पल्लवयत्युमापतिधरः संदर्भशुद्धिं गिरां
जानीते जयदेव एव शरणः श्लाघ्यो दुरूहद्रुतेः ।
शृङ्गारोत्तरसत्प्रमेयरचनैराचार्यगोवर्धन—
स्पर्धी कोऽपि न विश्रुतः श्रुतिधरो धोयी कविक्ष्मापतिः ॥ ४ ॥

### प्रथमः प्रबंधः

मालवरागेण रूपकतालेन च गीयते ।

प्रलयपयोधिजले धृतवानसि वेदम्
विहितवहित्रचरित्रमखेदम् ।
केशव धृतमीनशरीर जय जगदीश हरे ॥ ध्रुवम् ॥ १ ॥

क्षितिरतिविपुलतरे तव तिष्ठति पृष्ठे
धरणिधरणकिणचक्रगरिष्ठे ।
केशव धृतकच्छपरूप जय जगदीश हरे ॥ २ ॥
वसति दशनशिखरे धरणी तव लग्ना
शशिनि कलङ्ककलेव निमग्ना ।
केशव धृतशूकररूप जय जगदीश हरे ॥ ३ ॥
तव करकमलवरे नखमद्भुतशृङ्गम्
दलितहिरण्यकशिपुतनुभृङ्गम् ।
केशव धृतनरहरिरूप जय जगदीश हरे ॥ ४ ॥
छलयसि विक्रमणे बलिमद्भुतवामन
पदनखनीरजनितजनपावन ।
केशव धृतवामनरूप जय जगदीश हरे ॥ ५ ॥
क्षत्रियरुधिरमये जगदपगतपापं
स्नपयसि पयसि शमितभवतापम् ।
केशव धृतभृगुपतिरूप जय जगदीश हरे ॥ ६ ॥
वितरसि दिक्षु रणे दिक्पतिकमनीयं
दशमुखमौलिबलिं रमणीयम् ।
केशव धृतरामशरीर जय जगदीश हरे ॥ ७ ॥
वहसि वपुषि विशदे वसनं जलदाभं
हलहतिभीतिमिलितयमुनाभम् ।
केशव धृतहलधररूप जय जगदीश हरे ॥ ८ ॥
निन्दसि यज्ञविधेरहह श्रुतिजातं
सदयहृदय दर्शितपशुघातम् ।
केशव धृतबुद्धशरीर जय जगदीश हरे ॥ ९ ॥
म्लेच्छनिवहनिधने कलयसि करवालं
धूमकेतुमिव किमपि करालम् ।
केशव धृतकल्किशरीर जय जगदीश हरे ॥ १० ॥

श्रीजयदेवकवेरिदमुदितमुदारं
शृणु शुभद सुखद भवसारम्।
केशव धृतदशविधरूप जय जगदीश हरे ॥ ११ ॥

वेदानुद्धरते जगन्निवहते भूगोलमुद्बिभ्रते
दैत्यान्दारयते बलिं छलयते क्षत्रक्षयं कुर्वते।
पौलस्त्यं जयते हलं कलयते कारुण्यमातन्वते
म्लेच्छान्मूर्च्छयते दशाकृतिकृते कृष्णाय तुभ्यं नमः ॥ ५ ॥

## द्वितीयः प्रबंधः।

### गुर्जरीरागनिःसारतालाभ्यां गीयते ॥

श्रितकमलाकुचमण्डल धृतकुंडल ए
कलितललितवनमाल जय जय देव हरे ॥ ध्रुवम् ॥ १ ॥
दिनमणिमण्डलमण्डन भवखण्डन ए
मुनिजनमानसहंस जय जय देव हरे ॥ २ ॥
कालियविषधरगञ्जन जनरञ्जन ए
यदुकुलनलिनदिनेश जय जय देव हरे ॥ ३ ॥
मधुमुरनरकविनाशन गरुडासन ए
सुरकुलकेलिनिदान जय जय देव हरे ॥ ४ ॥
अमलकमलदललोचन भवमोचन ए
त्रिभुवनभवननिदान जय जय देव हरे ॥ ५ ॥
जनकसुताकृतभूषण जितदूषण ए
समरशमितदशकण्ठ जय जय देव हरे ॥ ६ ॥
अभिनवजलधरसुन्दर धृतमन्दर ए
श्रीमुखचन्द्रचकोर जय जय देव हरे ॥ ७ ॥
तव चरणे प्रणता वयमिति भावय ए
कुरु कुशलं प्रणतेषु जय जय देव हरे ॥ ८ ॥
श्रीजयदेवकवेरिदं कुरुते मुदम् ए
मङ्गलमुज्ज्वलगीति जय जय देव हरे ॥ ९ ॥

पद्मापयोधरतटीपरिरम्भलग्नकाश्मीरमुद्रितमुरो मधुसूदनस्य ।
व्यक्तानुरागमिव खेलदनङ्गखेदस्वेदाम्बुपूरमनुपूरयतु प्रियं वः ॥ २६ ॥

इति श्रीजयदेवविरचिते गीतगोविन्दे प्रस्तावना ।

# प्रथमः सर्गः ॥

वसन्ते वासन्तीकुसुमसुकुमारैरवयवै-
र्भ्रमन्तीं कान्तारे बहुविहितकृष्णानुसरणाम् ।
अमन्दं कन्दर्पज्वरजनितचिन्ताकुलतया
वलद्बाधां राधां सरसमिदमूचे सहचरी ॥ १ ॥

## प्रथमः प्रबन्धः ।

### वसन्तरागयतितालाभ्यां गीयते ॥

ललितलवङ्गलतापरिशीलनकोमलमलयसमीरे
मधुकरनिकरकरम्बितकोकिलकूजितकुञ्जकुटीरे ।
विहरति हरिरिह सरसवसन्ते नृत्यति
युवतिजनेन समं सखि विरहिजनस्य दुरन्ते ॥ ध्रुवम् ॥ २ ॥
उन्मदमदनमनोरथपथिकवधूजनजनितविलापे ।
अलिकुलसंकुलकुसुमसमूहनिराकुलबकुलकलापे ॥ विह० ॥ ३ ॥
मृगमदसौरभरभसवशंवदनवदलमालतमाले ।
युवजनहृदयविदारणमनसिजनखरुचिकिंशुकजाले ॥ विह० ॥ ४ ॥
मदनमहीपतिकनकदण्डरुचिकेशरकुसुमविकासे ।
मिलितशिलीमुखपाटलिपटलकृतस्मरतूणविलासे ॥ विह० ॥ ५ ॥
विगलितलज्जितजगदवलोकनतरुणकरुणकृतहासे ।
विरहिनिकृन्तनकुन्तमुखाकृतिकेतकदन्तुरिताशे ॥ विह० ॥ ६ ॥
माधविकापरिमलललिते नवमालतिजातिसुगन्धौ ।
मुनिमनसामपि मोहनकारिणि तरुणाकारणबन्धौ ॥ विह० ॥ ७ ॥

स्फुरदतिमुक्तलतापरिरम्भणमुकुलितपुलकितचूते ।
　　वृंदावनविपिने परिसरपरिगतयमुनाजलपूते ॥ विह० ॥ ८ ॥
श्रीजयदेवभणितमिदमुदयति हरिचरणस्मृतिसारम् ।
　　सरसवसन्तसमयवनवर्णनमनुगतमदनविकारम् ॥ विह० ॥ ९ ॥

दरविदलितवल्लीमल्लिचञ्चत्पराग—
　　प्रकटितपटवासैर्वासयन्काननानि ।
इह हि दहति चेतः केतकीगन्धबन्धु—
　　प्रसरदसमबाणप्राणवद्गन्धवाहः ॥ २ ॥

नित्योत्सङ्गवसद्भुजङ्गकवलक्लेशादिवेशाचलं
　　प्रालेयप्लवनेच्छयानुसरति श्रीखण्डशैलानिलः ।
किंच स्निग्धरसालमौलिमुकुलान्यालोक्य हर्षोदया—
　　दुन्मीलन्ति कुहूः कुहूरिति कलोत्तालाः पिकानां गिरः ॥ ३ ॥

उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुर—
　　क्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः ।
नीयन्ते पथिकैः कथं कथमपि ध्यानावधानक्षण—
　　प्राप्तप्राणसमासमागमरसोल्लासैरमी वासराः ॥ ४ ॥

अनेकनारीपरिरम्भसंभ्रमस्फुरन्मनोहारिविलासलालसम् ।
मुरारिमारादुपदर्शयन्त्यसौ सखी समक्षं पुनराह राधिकाम् ॥ ५ ॥

## तृतीयः प्रबंधः ।

### रामकरीरागयतितालाभ्यां गीयते ॥

चन्दनचर्चितनीलकलेवरपीतवसनवनमाली ।
　　केलिचलन्मणिकुण्डलमण्डितगण्डयुगः स्मितशाली ।
　　　　हरिरिह मुग्धवधूनिकरे विलासिनि विलसति केलिपरे ॥ ध्रुवम् ॥
पीनपयोधरभारभरेण हरिं परिरभ्य सरागम् ।

कापि विलासविलोलविलोचनखेलनजनितमनोजम् ।
ध्यायति मुग्धवधूरधिकं मधुसूदनवदनसरोजम् ॥ हरि० ॥ ४ ॥
कापि कपोलतले मिलिता लपितुं किमपि श्रुतिमूले ।
चारु चुचुम्ब नितम्बवती दयितं पुलकैरनुकूले ॥ हरि० ॥ ५ ॥
केलिकलाकुतुकेन च काचिदमुं यमुनाजलकूले ।
मञ्जुलवञ्जुलकुञ्जगतं विचकर्ष करेण दुकूले ॥ हरि० ॥ ६ ॥
करतलतालतरलवलयावलिकलितकलस्वनवंशे ।
रासरसे सह नृत्यपरा हरिणा युवतिः प्रशशंसे ॥ हरि० ॥ ७ ॥
श्लिष्यति कामपि चुम्बति कामपि कामपि रमयति रामाम् ।
पश्यति सस्मितचारुतरामपरामनुगच्छति वामाम् ॥ हरि० ॥ ८ ॥
श्रीजयदेवभणितमिदमद्भुतकेशवकेलिरहस्यम् ।
वृन्दावनविपिने ललितं वितनोतु शुभानि यशस्यम् ॥ हरि० ॥ ९ ॥

विश्वेषामनुरञ्जनेन जनयन्नानन्दमिंदीवर—
श्रेणीश्यामलकोमलैरुपनयन्नङ्गैरनङ्गोत्सवम् ।
स्वच्छन्दं व्रजसुन्दरीभिरभितः प्रत्यङ्गमालिङ्गितः
शृङ्गारः सखि मूर्तिमानिव मधौ मुग्धो हरिः क्रीडति॥ ६ ॥

साकूतस्मितमाकुलाकुलगलद्धम्मिल्लमुल्लासित—
भ्रूवल्लीकमलीकदर्शितभुजामूलोर्ध्वहस्तस्तनम् ।
गोपीनां निभृतं निरीक्ष्य गमिताकांक्षश्चिरं चिन्तय—
न्नन्तर्मुग्धमनोहरं हरतु वः क्लेशं नवः केशवः ॥ ७ ॥

इति श्रीजयदेवविरचिते गीतगोविन्दे अक्लेशकेशवो नाम द्वितीयः सर्गः ॥

## द्वितीयः सर्गः ॥

विहरति वने राधा साधारणप्रणये हरौ
विगलितनिजोत्कर्षादीर्ष्यावशेन गतान्यतः ।

क्वचिदपि लताकुंजे गुञ्जन्मधुव्रतमण्डली—
मुखरशिखरे लीना दीनाप्युवाच रहः सखीम् ॥१॥

प्रथम प्रबंध ।

गुर्जरीरागेण यतितालेन च गीयते ॥

सञ्चरदधरसुधामधुरध्वनिमुखरितमोहनवंश
चलितदृगञ्चलचञ्चलमौलिकपोलविलोलवतंसम् ।
रासे हरिमिह विहितविलास
स्मरति मनो मम कृतपरिहासम् ॥ ध्रुवम् ॥ २ ॥
चन्द्रकचारुमयूरशिखण्डकमण्डलवलयितकेशम् ।
प्रचुरपुरन्दरधनुरनुरञ्जितमेदुरमुदिरसुवेशम् ॥ रासे० ॥ ३ ॥
गोपकदम्बनितम्बवतीमुखचुम्बनलम्भितलोभम् ।
बन्धुजीवमधुराधरपल्लवमुल्लसितस्मितशोभम् ॥ रासे० ॥ ४ ॥
विपुलपुलकभुजपल्लववलयितवल्लवयुवतिसहस्रम् ।
करचरणोरसि मणिगणभूषणकिरणविभिन्नतमिस्रम् ॥ रासे० ॥ ५ ॥
जलदपटलवलदिन्दुविनिन्दकचन्दनतिलकललाटम् ।
पीनपयोधरपरिसरमर्दननिर्दयहृदयकपाटम् ॥ रासे० ॥ ६ ॥
मणिमयमकरमनोहरकुण्डलमण्डितगण्डमुदारम् ।
पीतवसनमनुगतमुनिमनुजसुरासुरवरपरिवारम् ॥ रासे० ॥ ७ ॥
विशदकदम्बतले मिलितं कलिकलुषभयं शमयन्तम् ।
मामपि किमपि तरलतरङ्गदनङ्गदृशा मनसा रमयन्तम् ॥ रासे ॥ ८ ॥
श्रीजयदेवभणितमतिसुन्दरमोहनमधुरिपुरूपम् ।
हरिचरणस्मरणं प्रति सम्प्रति पुण्यवतामनुरूपम् ॥ रासे० ॥ ९ ॥

गणयति गुणग्रामं भामं भ्रमादपि नेहते
वहति च परीतोषं दोषं विमुञ्चति दूरतः ।
युवतिषु वलत्तृष्णे कृष्णे विहारिणि मां विना

## द्वितीयः प्रबन्धः ।

### मालवगौडरागेण एकतालीतालेन च गीयते ॥

निभृतनिकुञ्जगृहं गतया निशि रहसि निलीय वसन्तम् ।
चकितविलोकितसकलदिशा रतिरभसभरेण हसन्तम् ।
सखि हे केशीमथनमुदारं रमय मया सह
मदनमनोरथभावितया सविकारम् ॥ ध्रुवम् ॥ २ ॥
प्रथमसमागमलज्जितया पटुचाटुशतैरनुकूलम् ।
मृदुमधुरस्मितभाषितया शिथिलीकृतजघनदुकूलम् ॥ सखि० ॥ ३ ॥
किसलयशयननिवेशितया चिरमुरसि ममैव शयानम् ।
कृतपरिरम्भणचुम्बनया परिरभ्य कृताधरपानम् ॥ सखि० ॥ ४ ॥
अलसनिमीलितलोचनया पुलकावलिललितकपोलम् ।
श्रमजलसकलकलेवरया वरमदनमदादतिलोलम् ॥ सखि० ॥ ५ ॥
कोकिलकलरवकूजितया जितमनसिजतन्त्रविचारम् ।
श्लथकुसुमाकुलकुन्तलया नखलिखितघनस्तनभारम् ॥ सखि० ॥ ६ ॥
चरणरणितमणिनूपुरया परिपूरितसुरतवितानम् ।
मुखरविशृङ्खलमेखलया सकचग्रहचुम्बनदानम् ॥ सखि० ॥ ७ ॥
रतिसुखसमयरसालसया दरमुकुलितनयनसरोजम् ।
निःसहनिपतिततनुलतया मधुसूदनमुदितमनोजम् ॥ सखि० ॥ ८ ॥
श्रीजयदेवभणितमिदमतिशयमधुरिपुनिधुवनशीलम् ।
सुखमुत्कण्ठितगोपवधूकथितं वितनोतु सलीलम् ॥ सखि० ॥ ९ ॥

हस्तस्रस्तविलासवंशमनृजुभ्रूवल्लिमद्बल्लवी—
वृन्दोत्सारिदृगन्तवीक्षितमतिस्वेदार्द्रगण्डस्थलम् ।
मामुद्वीक्ष्य विलज्जितं स्मितसुधामुग्धाननं कानने
गोविन्दं व्रजसुन्दरीगणवृतं पश्यामि हृष्यामि च ॥ ३ ॥

दुरालोकस्तोकस्तबकनवकाशोकलतिका-
विकासः कासारोपवनपवनोऽपि व्यथयति ।
अपि भ्राम्यद्भृङ्गीरणितरमणीया न मुकुल-
प्रसूतिश्चूतानां सखि शिखरिणीयं सुखयति ॥ ४ ॥

राधामुग्धमुखारविन्दमधुपस्त्रैलोक्यमौलिस्थली–
नेपथ्योचितनीलरत्नमवनीभारावतारान्तकः ।
स्वच्छन्दं व्रजसुन्दरीजनमनस्तोषप्रदोषोदयः
कंसध्वंसनधूमकेतुरवतु त्वां देवकीनन्दनः ॥ ५ ॥

इति श्रीजयदेवविरचिते गीतगोविन्देऽक्लेशकेशवो नाम द्वितीयः सर्गः ॥

# तृतीयः सर्गः ॥

कंसारिरपि संसारवासनाबद्धशृङ्खलाम् ।
राधामाधाय हृदये तत्याज व्रजसुन्दरीः ॥ १ ॥

इतस्ततस्तामनुसृत्य राधिकामनङ्गबाणव्रणखिन्नमानसः ।
कृतानुतापः स कलिन्दनन्दिनीतटान्तकुञ्जे विषसाद माधवः ॥ २ ॥

## प्रथमः प्रबंधः ॥

### गुर्जरीरागयतितालाभ्यां गीयते ॥

मामियं चलिता विलोक्य वृतं वधूनिचयेन
सापराधतया मयापि न वारितातिभयेन
हरिहरि हतादरतया गता सा कुपितेव ॥ ध्रुवम् ॥ ३ ॥

किं करिष्यति किं वदिष्यति सा चिरं विरहेण ।
किं धनेन जनेन किं मम जीवितेन गृहेण ॥ हरिहरि० ॥ ४ ॥

तामहं हृदि संगतामनिशं भृशं रमयामि ।
किं वनेऽनुसरामि तामिह किं वृथा विलपामि॥ हरिहरि० ॥ ५ ॥

दृश्यसे पुरतो गतागतमेव मे विदधासि ।
किं पुरेव ससम्भ्रमं परिरम्भणं न ददासि ॥ हरिहरि० ॥ ६ ॥

तन्वि खिन्नमसूयया हृदयं तवाकलयामि ।
तन्न वेद्मि कुतो गतासि नतेन तेऽनुनयामि ॥ हरिहरि० ॥ ७ ॥

चिन्तयामि तदाननं कुटिलभ्रु कोपभरेण ।
शोणपद्ममिवोपरि भ्रमताकुलं भ्रमरेण ॥ हरिहरि० ॥ ८ ॥

क्षम्यतामपरं कदापि तवेदृशं न करोमि ।
    देहि सुन्दरि दर्शनं मम मन्मथेन दुनोमि ॥ हरिहरि० ॥ ९ ॥
वर्णितं जयदेवकेन हरेरिदं प्रणतेन ।
    किन्दुबिल्वसमुद्रसंभवरोहिणीरमणेन ॥ हरिहरि० ॥ १० ॥

हृदि बिसलताहारो नायं भुजङ्गमनायकः
    कुवलयदलश्रेणी कण्ठे न सा गरलद्युतिः ।
मलयजरजो नेदं भस्म प्रियारहिते मयि
    प्रहर न हरभ्रान्त्यानङ्ग क्रुधा किमु धावसि ॥ ३ ॥

पाणौ मा कुरु चूतसायकममुं मा चापमारोपय
    क्रीडानिर्जितविश्व मूर्च्छितजनाघातेन किं पौरुषम् ।
तस्या एव मृगीदृशो मनसिजप्रेङ्खत्कटाक्षाशुग-
    श्रेणीजर्जरितं मनागपि मनो नाद्यापि संधुक्षते ॥ ४ ॥

भ्रूपल्लवं धनुरपाङ्गतरङ्गितानि
    बाणा गुणः श्रवणपालिरिति स्मरेण ।
तस्यामनङ्गजयजङ्गमदेवतायाम्-
    अस्त्राणि निर्जितजगन्ति किमर्पितानि ॥ ५ ॥

भ्रूचापे निहितः कटाक्षविशिखो निर्मातु मर्मव्यथां
    श्यामात्मा कुटिलः करोतु कबरीभारोऽपि मारोद्यमम् ।
मोहं तावदयं च तन्वि तनुतां बिम्बाधरो रागवान्
    सद्वृत्तः स्तनमण्डलस्तव कथं प्राणैर्मम क्रीडति ॥ ६ ॥

तानि स्पर्शसुखानि ते च तरलाः स्निग्धा दृशोर्विभ्रमा-
    स्तद्वक्त्राम्बुजसौरभं स च सुधास्यन्दी गिरां वक्रिमा ।
सा बिम्बाधरमाधुरीति विषयासङ्गेऽपि चेन्मानसं
    तस्यां लग्नसमाधि हन्त विरहव्याधिः कथं वर्धते ॥ ७ ॥

तिर्यक्कण्ठविलोलमौलितरलोत्तंसस्य वंशोच्चरद्-
रासोत्सवभरेण विभ्रमभृतामाभीरवामभ्रुवा-
    मभ्यर्णे परिरभ्य निर्भरमुरः प्रेमान्धया राधया ।

गातु त्वद्वदनं सुधामयमिति व्याहृत्य गीतस्तुति-
व्याजादुद्भटचुम्बितस्मितमनोहारी हरिः पातु वः ॥ ८ ॥

इति श्रीगीतगोविन्दे मुग्धमधुमदनो नाम तृतीयः सर्गः ॥

# चतुर्थः सर्गः ॥

यमुनातीरवानीरनिकुञ्जे मन्दमास्थितम् ।
प्राह प्रेमभरोद्भ्रान्तं माधवं राधिकासखी ॥ १ ॥

## प्रथमः प्रबन्धः ।

### कर्णाटरागैकतालीतालाभ्यां गीयते ॥

निन्दति चन्दनमिन्दुकिरणमनु विन्दति खेदमधीरम् ।
व्यालनिलयमिलनेन गरलमिव कलयति मलयसमीरम् ॥
माधव मनसिजविशिखभयादिव भावनया त्वयि लीना ।
सा विरहे तव दीना ॥ ध्रुवम् ॥ २ ॥

अविरलनिपतितमदनशरादिव भवदवनाय विशालम् ।
स्वहृदयमर्मणि वर्म करोति सजलनलिनीदलजालम् ॥ सा वि० ३ ॥

कुसुमविशिखशरतल्पमनल्पविलासकलाकमनीयम् ।
व्रतमिव तव परिरम्भसुखाय करोति कुसुमशयनीयम् ॥ सा वि० ४ ॥

वहति च चलितविलोचनजलभरमाननकमलमुदारम् ।
विधुमिव विकटविधुन्तुददन्तदलनगलितामृतधारम् ॥ सा वि० ५ ॥

विलिखति रहसि कुरङ्गमदेन भवन्तमसमशरभूतम् ।
प्रणमति मकरमधो विनिधाय करे च शरं नवचूतम् ॥ सा वि० ६ ॥

प्रतिपदमिदमपि निगदति माधव तव चरणे पतिताहम् ।
त्वयि विमुखे मयि सपदि सुधानिधिरपि तनुते तनुदाहम् ॥ सा वि० ७ ॥

ध्यानलयेन पुरः परिकल्प्य भवन्तमतीव दुरापम् ।
विलपति हसति विषीदति रोदिति चञ्चति मुञ्चति तापम् ॥ सा वि० ८ ॥

श्रीजयदेवभणितमिदमधिकं यदि मनसा नटनीयम् ।
हरिविरहाकुलवल्लवयुवतिसखीवचनं पठनीयम् ॥ सा वि० ॥ ८ ॥

आवासो विपिनायते प्रियसखीमालापि जालायते
तापोऽपि श्वसितेन दावदहनज्वालाकलापायते ।
सापि त्वद्विरहेण हन्त हरिणीरूपायते हा कथं
कन्दर्पोऽपि यमायते विरचयञ्छार्दूलविक्रीडितम् ॥ १ ॥

## द्वितीयः प्रबंध ।

### देशाख्यरागकतालीतालाभ्यां गीयते ।

स्तनविनिहितमपि हारमुदारम् ।
सा मनुते कृशतनुरिव भारम् ॥
राधिका तव विरहे केशव ॥ ध्रुवम् ॥ १ ॥

सरसमसृणमपि मलयजपङ्कम् ।
पश्यति विषमिव वपुषि सशङ्कम् ॥ राधिका० ॥ २ ॥

श्वसितपवनमनुपमपरिणाहम् ।
मदनदहनमिव वहति सदाहम् ॥ राधिका० ॥ ३ ॥

दिशि दिशि किरति सजलकणजालम् ।
नयननलिनमिव विगलितनालम् ॥ राधिका० ॥ ४ ॥

त्यजति न पाणितलेन कपोलम् ।
बालशशिनमिव सायमलोलम् ॥ राधिका० ॥ ५ ॥

नयनविषयमपि किसलयतल्पम् ।
गणयति विहितहुताशविकल्पम् ॥ राधिका० ॥ ६ ॥

हरिरिति हरिरिति जपति सकामम् ।
विरहविहितमरणेव निकामम् ॥ राधिका० ॥ ७ ॥

श्रीजयदेवभणितमिति गीतम् ।
सुखयतु केशवपदमुपनीतम् ॥ राधिका० ॥ ८ ॥

कन्दर्पज्वरसञ्ज्वरातुरतनोराश्चर्यमस्याश्चिर
चेतश्चन्दनचन्द्रमःकमलिनीचिन्तासु सन्ताम्यति ।
किंतु क्लान्तिवशेन शीतलतनु त्वामेकमेव प्रिय
ध्यायन्ती रहसि स्थिता कथमपि क्षीणा क्षणं प्राणिति ॥ ३ ॥

स्मरातुरां दैवतवैद्यहृद्य त्वदङ्गसङ्गामृतमात्रसाध्याम् ।
विमुक्तबाधां कुरुषे न राधामुपेन्द्र वज्रादपि दारुणोऽसि ॥ ४ ॥

सा रोमाञ्चति सीत्करोति विलपत्युत्कम्पते ताम्यति ।
ध्यायत्युद्भ्रमति प्रमीलति पतत्युद्याति मूर्च्छत्यपि ॥
एतावत्यतनुज्वरे वरतनुर्जीवेन्न किं ते रसा-
त्स्वर्वैद्यप्रतिम प्रसीदसि यदि त्यक्तोऽन्यथा हस्तकः ॥ ५ ॥

क्षणमपि विरहः पुरा न सेहे
नयननिमीलनखिन्नया यया ते ।
श्वसिति कथमसौ रसालशाखां
चिरविरहेण विलोक्य पुष्पिताग्राम् ॥ ६ ॥

स प्रीतिं तनुतां हरिः कुवलयापीडेन सार्धं रणे
राधापीनपयोधरस्मरणकृत्कुम्भेन सम्भेदवान् ।
यत्र स्विद्यति मीलति क्षणमपि क्षिप्रं तदालोकन-
व्यामोहेन जितं जितं जितमभूत्कंसस्य कोलाहलः ॥ ७ ॥

इति श्रीजयदेवविरचिते गीतगोविन्दे स्निग्धमधुसूदनो नाम चतुर्थः सर्गः ॥

## पञ्चमः सर्गः ॥

अहमिह निवसामि याहि राधा-
मनुनय मद्वचनेन चानयेथाः ॥
इति मधुरिपुणा सखी नियुक्ता
स्वयमिदमेत्य पुनर्जगाद राधाम् ॥ १ ॥

### प्रथमः प्रबंधः ।

### देशीवराडीरागेण रूपकतालेन च गीयते ।

वहति मलयसमीरे मदनमुपनिधाय

स्फुटति कुसुमनिकरे विरहिहृदयदलनाय । *

तव विरहे वनमाली सखि सीदति ॥ ध्रुवम् ॥ १ ॥

वसति विपिनविताने त्यजति ललितधाम ।

लुठति धरणिशयने बहु विलपति तव नाम ॥ तव वि०॥ २ ॥

ध्वनति मधुपसमूहे श्रवणमपिदधाति ।

मनसि कलितविरहे निशि निशि रुजमुपयाति ॥ तव वि० ३ ॥

दहति शिशिरमयूखे मरणमनुकरोति ।

पतति मदनविशिखे विलपति विकलतरोऽति ॥ तव वि० ४ ॥

भणति कविजयदेवे विरहविलसितेन ।

मनसि रभसविभवे हरिरुदयतु सुकृतेन ॥ तव वि० ॥ ५ ॥

पूर्वं यत्र समं त्वया रतिपतेरासादिताः सिद्धय-

स्तस्मिन्नेव निकुञ्जमन्मथमहातीर्थे पुनर्माधवः ।

ध्यायंस्त्वामनिशं जपन्नपि तवैवालापमन्त्रावलीं

भूयस्त्वत्कुचकुम्भनिर्भरपरीरम्भामृतं वाञ्छति ॥ २ ॥

### द्वितीयः प्रबंधः ।

### गुर्जरीरागेण एकतालीतालेन च गीयते ॥

रतिसुखसारे गतमभिसारे मदनमनोहरवेशम् ।

न कुरु नितम्बिनि गमनविलम्बनमनुसर तं हृदयेशम् ॥

धीरसमीरे यमुनातीरे वसति वने वनमाली ।

गोपीपीनपयोधरमर्दनचञ्चलकरयुगशाली ॥ ध्रुवम् ॥ १ ॥

नामसमेतं कृतसंकेतं वादयते मृदु वेणुम् ।

बहु मनुतेऽनु ते तनुसंगतपवनचलितमपि रेणुम् ॥ धीर० ॥ २ ॥

पतति पतत्रे विचलति पत्रे शङ्कितभवदुपयानम् ।

रचयति शयनं सचकितनयनं पश्यति तव पन्थानम् ॥ धीर० ॥ ३ ॥

मुखरमधीरं त्यज मंजीरं रिपुमिव केलिषुलोलम् ।
चल सखि कुञ्जं सतिमिरपुञ्जं शीलय नीलनिचोलम् ॥ धीर० ॥ ४ ॥
उरसि मुरारेरुपहितहारे घन इव तरलबलाके ।
तडिदिव पीते रतिविपरीते राजसि सुकृतविपाके ॥ धीर० ॥ ५ ॥
विगलितवसनं परिहृतरसनं घटय जघनमपिधानम् ।
किसलयशयने पंकजनयने निधिमिव हर्षनिधानम् ॥ धीर० ॥ ६ ॥
हरिरभिमानी रजनिरिदानीमियमपि याति विरामम् ।
कुरु मम वचनं सत्वररचनं पूरय मधुरिपुकामम् ॥ धीर० ॥ ७ ॥
श्रीजयदेवे कृतहरिसेवे भणति परमरमणीयम् ।
प्रमुदितहृदयं हरिमतिसदयं नमत सुकृतकमनीयम् ॥ धीर० ॥ ८ ॥

विकिरति मुहुः श्वासानाशाः पुरो मुहुरीक्षते
प्रविशति मुहुः कुञ्जं गुञ्जन्मुहुर्बहु ताम्यति ।
रचयति मुहुः शय्यां पर्याकुलं मुहुरीक्षते ।
मदनकदनक्लान्तः कान्ते प्रियस्तव वर्तते ॥ ३ ॥

त्वद्वाम्येन समं समग्रमधुना तिग्मांशुरस्तंगतो
गोविन्दस्य मनोरथेन च समं प्राप्तं तमः सान्द्रताम् ।
कोकानां करुणस्वनेन सदृशी दीर्घा मदभ्यर्थना
तन्मुग्धे विफलं विलम्बनमसौ रम्योऽभिसारक्षणः ॥ ४ ॥

आश्लेषादनु चुम्बनादनु नखोल्लेखादनु स्वान्तज-
प्रोद्बोधादनु सम्भ्रमादनु रतारम्भादनु प्रीतयोः ।
अन्यार्थं गतयोर्भ्रमान्मिलितयोः संभाषणैर्जानतो-
र्दम्पत्योरिह को न को न तमसि व्रीडाविमिश्रो रसः ॥ ५ ॥

सभयचकितं विन्यस्यन्तीं दृशं तिमिरे पथि
प्रतितरु मुहुः स्थित्वा मन्दं पदानि वितन्वतीम् ।
कथमपि रहः प्राप्तामङ्गैरनङ्गतरङ्गिभिः
सुमुखि सुभगः पश्यन्स त्वामुपैतु कृतार्थताम् ॥ ६ ॥

जयश्रीविन्यस्तैर्महित इव मन्दारकुसुमैः
स्वयं सिन्दूरेण द्विपरणमुदा मुद्रित इव ।
भुजापीडक्रीडाहतकुवलयापीडकरिणः
प्रकीर्णासृग्बिन्दुर्जयति भुजदण्डो मुरजितः ॥ ७ ॥

इति श्रीगीतगोविंदेऽभिसारिकावर्णने साकाङ्क्षपुण्डरीकाक्षो नाम पञ्चमः सर्गः ॥

## षष्ठः सर्गः ॥

अथ तां गन्तुमशक्तां चिरमनुरक्तां लतागृहे दृष्ट्वा ।
तच्चरितं गोविन्दे मनसिजमन्दे सखी प्राह ॥ १ ॥

### प्रथमः प्रबंधः ॥

#### गोण्डकरीरागेण रूपकतालेन च गीयते ॥

पश्यति दिशि दिशि रहसि भवन्तम् ।
तदधरमधुरमधूनि पिबन्तम् ॥
नाथ हरे सीदति राधा वासगृहे ॥ ध्रुवम् ॥ १ ॥

मुहुरवलोकितमण्डनलीला ।
मधुरिपुरहमिति भावनशीला ॥ नाथ हरे० ॥ २ ॥

विहितविशदबिसकिसलयवलया ।
जीवति परमिह तव रतिकलया ॥ नाथ हरे० ॥ ३ ॥

त्वरितमुपैति न कथमभिसारम् ।
हरिरिति वदति सखीमनुवारम् ॥ नाथ हरे० ॥ ४ ॥

त्वदभिसरणरभसेन वलन्ती ।
पतति पदानि कियन्ति चलन्ती ॥ नाथ हरे० ॥ ५ ॥

श्लिष्यति चुम्बति जलधरकल्पम् ।
हरिरुपगत इति तिमिरमनल्पम् ॥ नाथ हरे० ॥ ६ ॥

मत्तति विलम्बिनि विगलितलज्जा ।
विलपति रोदिति वासकसज्जा ॥ नाथ हरे० ॥ ७ ॥
श्रीजयदेवकवेरिदमुदितम् ।
रसिकजन तनुतामतिमुदितम् ॥ नाथ हरे० ॥ ८ ॥

विपुलपुलकपालिः स्फीतसीत्कारमन्त-
र्जनितजडिमकाकुव्याकुलं व्याहरन्ती ।
तव कितव विधायामन्दकन्दर्पचिन्तां
रसजलधिनिमग्ना ध्यानलग्ना मृगाक्षी ॥ २ ॥

अङ्गेष्वाभरणं करोति बहुशः पत्रेऽपि सञ्चारिणि
प्राप्तं त्वां परिशङ्कते वितनुते शय्यां चिरं ध्यायति ।
इत्याकल्पविकल्पतल्परचनासङ्कल्पलीलाशत-
व्यासक्तापि विना त्वया वरतनुर्नैषा निशां नेष्यति ॥ ३ ॥

किं विश्राम्यसि कृष्णभोगिभवने भाण्डीरभूमीरुहि
भ्रातर्याहि न दृष्टिगोचरमितः सानन्दनन्दास्पदम् ।
राधाया वचनं तदध्वगमुखान्नन्दान्तिके गोपतो
गोविन्दस्य जयन्ति सायमतिथिप्राशस्त्यगर्भा गिरः ॥ ४ ॥

इति श्रीगीतगोविन्दे वासकसज्जावर्णने धृष्टवैकुण्ठो नाम षष्ठः सर्गः ॥

## सप्तमः सर्गः ॥

अत्रान्तरे च कुलटाकुलवर्त्मघात-
सञ्जातपातक इव स्फुटलाञ्छनश्रीः ।
वृन्दावनान्तरमदीपयदंशुजालै-
र्दिक्सुन्दरीवदनचन्दनबिन्दुरिन्दुः ॥ १ ॥

प्रसरति शशधरबिम्बे विहितविलम्बे च माधवे विधुरा ।
विरचितविविधविलापं सा परितापं चकारोच्चैः ॥ २ ॥

प्रथमः प्रबन्ध ॥
मालवरागयतितालाभ्यां गीयते ॥

कथितसमयेऽपि हरिरहह न ययौ वनं
मम विफलमिदममलरूपमपि यौवनम् ।
यामि हे कमिह शरणं सखीजनवचनवञ्चिता ॥ ध्रुवम् ॥ १ ॥
यदनुगमनाय निशि गहनमपि शीलितं
तेन मम हृदयमिदमसमशरकीलितम् ॥ यामि हे० ॥ २ ॥
मम मरणमेव वरमिति वितथकेतना ।
किमिति विषहामि विरहानलमचेतना ॥ यामि हे० ॥ ३ ॥
अहह कलयामि वलयादिमणिभूषणम् ।
हरिविरहदहनवहनेन बहुदूषणम् ॥ यामि हे० ॥ ४ ॥
कुसुमसुकुमारतनुमतनुशरलीलया ।
स्रगपि हृदि हन्ति मामतिविषमशीलया ॥ यामि हे० ॥ ५ ॥
अहमिह निवसामि नगणितवनवेतसा ।
स्मरति मधुसूदनो मामपि न चेतसा ॥ यामि हे० ॥ ६ ॥
मामहह विधुरयति मधुरमधुयामिनी ।
कापि हरिमनुभवति कृतसुकृतकामिनी ॥ यामि हे० ॥ ७ ॥
हरिचरणशरणजयदेवकविभारती ।
वसतु हृदि युवतिरिव कोमलकलावती ॥ यामि हे० ॥ ८ ॥

तत्किं कामपि कामिनीमभिसृतः किंवा कलाकेलिभि-
र्बद्धो बन्धुभिरन्धकारिणि वनाभ्यर्णे किमुद्भ्राम्यति ।
कान्तः क्लान्तमना मनागपि पथि प्रस्थातुमेवाक्षमः
सङ्केतीकृतमञ्जुवञ्जुललताकुञ्जेऽपि यन्नागतः ॥ ३ ॥

विरहपाण्डुमुरारिमुखाम्बुजद्युतिरयं तिरयन्नपि वेदनाम् ।
विधुरतीव तनोति मनोभुवः सुहृदये हृदये मदनव्यथाम् ॥ ४ ॥

अथागतां माधवमन्तरेण सखीमियं वीक्ष्य विषादमूकाम् ।
विशङ्कमाना रमितं कयापि जनार्दनं दृष्टवदेतदाह ॥ ५ ॥

## द्वितीयः प्रबन्धः ॥

### वसन्तरागयतितालाभ्यां गीयते ॥

स्मरसमरोचितविरचितवेशा ।
　　गलितकुसुमदरविलुलितकेशा ॥
　　कापि मधुरिपुणा विलसति युवतिरधिकगुणा ॥ ध्रुवम् ॥
हरिपरिरम्भणवलितविकारा ।
　　कुचकलशोपरि तरलितहारा ॥ कापि० ॥ २ ॥
विचलदलकललिताननचन्द्रा ।
　　तदधरपानरभसकृततन्द्रा ॥ कापि० ॥ ३ ॥
चञ्चलकुण्डलदलितकपोला ।
　　मुखरितरसनजघनगतिलोला ॥ कापि० ॥ ४ ॥
दयितविलोकितलज्जितहसिता ।
　　बहुविधकूजितरतिरसरसिता ॥ कापि० ॥ ५ ॥
विपुलपुलकपृथुवेपथुभङ्गा ।
　　श्वसितनिमीलितविकसदनङ्गा ॥ कापि० ॥ ६ ॥
श्रमजलकणभरसुभगशरीरा ।
　　परिपतितोरसि रतिरणधीरा ॥ कापि० ॥ ७ ॥
श्रीजयदेवभणितहरिरमितम् ।
　　कलिकलुषं जनयतु परिशमितम् ॥ कापि० ॥ ८ ॥

बाधां विधेहि मलयानिल पञ्चबाण
　　प्राणान्गृहाण न गृहं पुनराश्रयिष्ये ।
किं ते कृतान्तभगिनि क्षमया तरङ्गै
　　रङ्गानि सिञ्च मम शाम्यतु देहदाहः ॥ ९ ॥

तृतीयः प्रबन्धः ॥

गुर्जरीरागैकतालीतालाभ्यां गीयते ॥

समुदितमदने रमणीवदने चुम्बनवलिताधरे ।
मृगमदतिलकं लिखति सपुलकं मृगमिव रजनीकरे ॥

रमते यमुनापुलिनवने विजयी मुरारिरधुना ॥ ध्रुवम् ॥

घनचयरुचिरे रचयति चिकुरे तरलिततरुणानने ।
कुरबककुसुमं चपलासुषमं रतिपतिमृगकानने ॥ रमते० ॥ २ ॥

घटयति सुघने कुचयुगगगने मृगमदरुचिरूषिते ।
मणिसरममलं तारकपटलं नखपदशशिभूषिते ॥ रमते० ॥ ३ ॥

रतिगृहजघने विपुलापघने मनसिजकनकासने ।
मणिमयरसनं तोरणहसनं विकिरति कृतवासने ॥ रमते० ॥ ४ ॥

चरणकिसलये कमलानिलये नखमणिगणपूजिते ।
बहिरपवरणं यावकभरणं जनयति हृदि योजिते ॥ रमते० ॥ ५ ॥

जितबिसशकले मृदुभुजयुगले करतलनलिनीदले ।
मरकतवलयं मधुकरनिचयं वितरति हिमशीतले ॥ रमते० ॥ ६ ॥

रमयति सुदृशं कामपि सुभृशं खलहलधरसोदरे ।
किमफलमवसं चिरमिह विरसं वद सखि विटपोदरे ॥ रमते० ॥ ७ ॥

इह रसभणने कृतहरिगुणने मधुरिपुपदसेवके ।
कलियुगचरितं न वसतु दुरितं कविनृपजयदेवके ॥ रमते० ॥ ८ ॥

रिपुरिव सखीसंवासोऽयं शिखीव हिमानिलो
विषमिव सुधारश्मिर्यस्मिन्दुनोति मनोगते ।
हृदयमदये तस्मिन्नेवं पुनर्वलते बला-
त्कुवलयदृशां वामः कामो निकामनिरङ्कुशः ॥ ७ ॥

## चतुर्थः प्रबन्धः ॥

देशवराडीरागेण रूपकतालेन च गीयते ॥

सकलभुवनजनवरतरुणेन ।
　वहति न सा रुजमतिकरुणेन ॥
　　सखि या रमिता वनमालिना । ध्रुवम् ॥ १ ॥

सजलजलदसमुदयरुचिरेण ।
　दलति न सा हृदि विरहेण ॥ सखि या० ॥ २ ॥

कनकनिकषरुचिशुचिवसनेन ।
　ज्वलति न सा मलयजपवनेन ॥ सखि या० ॥ ४ ॥

अनिलतरलकुवलयनयनेन ।
　तपति न सा किसलयशयनेन ॥ सखि या० ॥ ५ ॥

विकसितसरसिजललितमुखेन ।
　लुठति न सा हिमकरकिरणेन ॥ सखि या० ॥ ६ ॥

स्थलजलरुहरुचिकरचरणेन ।
　श्वसिति न सा परिजनहसनेन ॥ सखि या० ॥ ७ ॥

अमृतमधुरमृदुतरवचनेन ।
　स्फुटति न सा मनसिजविशिखेन ॥ सखि या० ॥ ८ ॥

श्रीजयदेवभणितवचनेन ।
　प्रविशतु हरिरपि हृदयमनेन ॥ सखि या० ॥ ९ ॥

मनोभवानन्दन चन्दनानिल प्रसीद रे दक्षिण मुञ्च वामताम् ।
क्षणं जगत्प्राण विधाय माधवं पुरो मम प्राणहरो भविष्यसि ॥ ८ ॥

नायातः सखि निर्दयो यदि शठस्त्वं दूति किं दूयसे
　स्वच्छन्दं बहुवल्लभः स रमते किं तत्र ते दूषणम् ।
पश्याद्य प्रियसङ्गमाय दयितस्याकृष्यमाणं गुणै-
　रुत्कण्ठार्तिभरादिव स्फुटदिदं चेतः स्वयं यास्यति ॥ ९ ॥

अन्तर्मोहनमौलिघूर्णनचलन्मन्दारविस्रंसन-
　स्तम्भाकर्षणदृष्टिहर्षणमहामन्त्रः कुरङ्गीदृशाम् ।

दृप्यद्दानवदूयमानदिविषद्दुर्वारदुःखापदां

भ्रंशः कंसरिपोर्व्यपोहयतु वः श्रेयांसि वंशीरवः ॥ १० ॥

इति श्रीगीतगोविन्दे विप्रलब्धावर्णनेऽनागतनारायणो नाम सप्तमः सर्गः॥

# अष्टमः सर्गः॥

अथ कथमपि यामिनीं विनीय स्मरशरजर्जरितापि सा प्रभाते ।
अनुनयवचनं वदन्तमग्रे प्रणतमपि प्रियमाह साभ्यसूयम् ॥ १ ॥

## प्रथमः प्रबंधः ॥

### भैरवीरागयतितालाभ्यां गीयते ॥

रजनिजनितगुरुजागररागकषायितमलसनिवेशम् ।
वहति नयनमनुरागमिव स्फुटमुदितरसाभिनिवेशम् ॥
हरिहरि याहि माधव याहि केशव मा वद कैतववादम् ।
तामनुसर सरसीरुहलोचन या तव हरति विषादम् ॥ ध्रुवम् ॥

कज्जलमलिनविलोचनचुम्बनविरचितनीलिमरूपम् ।
दशनवसनमरुणं तव कृष्ण तनोति तनोरनुरूपम् ॥हरिहरि॥ २॥

वपुरनुहरति तव स्मरसङ्गरखरनखरक्षतरेखम् ।
मरकतशकलकलितकलधौतलिपेरिव रतिजयलेखम् ॥हरिहरि०॥ ३॥

चरणकमलगलदलक्तकसिक्तमिदं तव हृदयमुदारम् ।
दर्शयतीव बहिर्मदनद्रुमनवकिसलयपरिवारम् ॥ हरिहरि० ॥ ४ ॥

दशनपदं भवदधरगतं मम जनयति चेतसि खेदम् ।
कथयति कथमधुनापि मया सह तव वपुरेतदभेदम् ॥हरिहरि ॥५॥

वपुरिव मलिनतरं तव कृष्ण मनोऽपि भविष्यति नूनम् ।
कथमथ वञ्चयसे जनमनुगतमसमशरज्वरदूनम् ॥ हरिहरि० ॥ ६॥

भ्रमति भवानबलाकवलाय वनेषु किमत्र विचित्रम् ।
प्रथयति पूतनिकैव वधूवधनिर्दयबालचरित्रम् ॥ हरिहरि० ॥ ७॥

श्रीजयदेवभणितरतिवञ्चितखण्डितयुवतिविलापम् ।
शृणुत सुधामधुरं विबुधा विबुधालयतोऽपि दुरापम् ॥हरिहरि ॥ ८॥

तवेदं पश्यन्त्याः प्रसरदनुरागं बहिरिव
प्रियापादालक्तच्छुरितमरुणद्योति हृदयम् ।
ममाद्य प्रख्यातप्रणयभरभङ्गेन कितव
त्वदालोकः शोकादपि किमपि लज्जां जनयति ॥ २ ॥

सान्द्रानन्दपुरन्दरादिदिविषद्वृन्दैरमन्दादरा-
दानम्रैर्मुकुटेन्द्रनीलमणिभिः संदर्शितेन्दिन्दिरम् ।
स्वच्छन्दं मकरन्दसुन्दरगलन्मन्दाकिनीमेदुरं
श्रीगोविन्दपदारविन्दमशुभस्कन्दाय वन्दामहे ॥ ३ ॥

इति श्रीगीतगोविन्दे खण्डितावर्णने विलक्षलक्ष्मीपतिर्नामाष्टमः सर्गः ॥

## नवमः सर्गः ॥

तामथ मन्मथखिन्नां रतिरसभिन्नां विषादसम्पन्नाम् ।
अनुचिन्तितहरिचरितां कलहान्तरितामुवाच रहसि सखी ॥ १ ॥

प्रथम प्रबंध ॥

### गुर्जरीरागयतितालाभ्यां गीयते ॥

हरिरभिसरति वहति मधुपवने ।
किमपरमधिकसुखं सखि भवने ॥
माधवे मा कुरु मानिनि मानमये ॥ ध्रुवम् ॥

तालफलादपि गुरुमतिसरसम् ।
किं विफलीकुरुषे कुचकलशम् ॥ माध० ॥ २ ॥

किमिति विषीदसि रोदिषि विकला ।
विहसति युवतिसभा तव सकला ॥ माध० ॥ ३ ॥

कति न कथितमिदमनुपदमचिरम् ।
मा परिहर हरिमतिशयरुचिरम् ॥ माध० ॥ ४ ॥

सजलनलिनीदलशीतलशयने ।
हरिमवलोकय सफलय नयने ॥ माध० ॥ ५ ॥

जनयसि मनसि किमिति गुरुखेदम् ।
शृणु मम वचनमनीहितभेदम् ॥ माध० ॥ ६ ॥
हरिरुपयातु वदतु बहु मधुरम् ।
किमिति करोषि हृदयमतिविधुरम् ॥ माध० ॥ ७ ॥
श्रीजयदेवभणितमतिललितम् ।
सुखयतु रसिकजनं हरिचरितम् ॥ माध० ॥ ८ ॥

स्निग्धे यत्परुषासि यत्प्रणमति स्तब्धासि यद्रागिणि
द्वेषस्थासि यदुन्मुखे विमुखतां यातासि तस्मिन्प्रिये ।
तद्युक्तं विपरीतकारिणि तव श्रीखण्डचर्चा विषं
शीतांशुस्तपनो हिमं हुतवहः क्रीडामुदो यातनाः ॥ २ ॥

वृष्टिव्याकुलगोकुलावनरसादुद्धृत्य गोवर्धनं
बिभ्रद्वल्लववल्लभाभिरधिकानन्दाच्चिरं चुम्बितः ।
दर्पेणेव तदर्पिताधरतटीसिन्दूरमुद्राङ्कितो
बाहुर्गोपतनोस्तनोतु भवतां श्रेयांसि कंसद्विषः ॥ ३ ॥

इति श्रीगीतगोविन्दे कलहान्तरितावर्णनेऽमन्दमुकुन्दो नाम नवमः सर्गः ॥

## दशमः सर्गः ॥

अत्रान्तरे मसृणरोषवशामपार-
निःश्वासनिःसहमुखीं सुमुखीमुपेत्य ।
सव्रीडमीक्षितसखीवदनां दिनान्ते
सानन्दगद्गदपदं हरिरित्युवाच ॥ १ ॥

### प्रथमः प्रबन्धः ॥

### देशवराडीरागाष्टतालाभ्यां गीयते ॥

वदसि यदि किंचिदपि दन्तरुचिकौमुदी हरति दरतिमिरमतिघोरम्
स्फुरदधरसीधवे तव वदनचन्द्रमा रोचयतु लोचनचकोरम् ॥ १ ॥
प्रिये चारुशीले मुञ्च मयि मानमनिदानम् ।
सपदि मदनानलो दहति मम मानसं देहि मुखकमलमधुपानम् ॥ ध्रुवम् ।

नीलनलिनाभमपि तन्वि तव लोचनं धारयति कोकनदरूपम् ।
कुसुमशरबाणभावेन यदि रञ्जयसि कृष्णमिदमेतदनुरूपम् ॥ प्रिये०॥३॥
सत्यमेवासि यदि सुदति मयि कोपिनी देहि खरनखरशरघातम् ।
घटय भुजबन्धनं जनय रदखण्डनं येन वा भवति सुखजातम् ॥प्रिये०॥४॥
त्वमसि मम भूषणं त्वमसि मम जीवनं त्वमसि मम भवजलधिरत्नम् ।
भवतु भवतीह मयि सततमनुरोधिनी तत्र मम हृदयमतियत्नम् ॥प्रिये०॥५॥
स्मरगरलखण्डनं मम शिरसि मण्डनं देहि पदपल्लवमुदारम् ।
ज्वलति मयि दारुणो मदनकदनानलो हरतु तदुपाहितविकारम् ॥प्रिये०॥६॥
स्थलकमलगञ्जनं मम हृदयरञ्जनं जनितरतिरङ्गपरभागम् ।
भण मसृणवाणि करवाणि चरणद्वयं सरसलसदलक्तकरागम् ॥ प्रिये०॥७॥
स्फुरतु कुचकुम्भयोरुपरि मणिमञ्जरी रञ्जयतु तव हृदयदेशम् ।
रमतु रसनापि तव घनजघनमण्डले घोषयतु मन्मथनिदेशम् ॥ प्रिये०॥८॥
इति चटुलचाटुपटुचारु मुरवैरिणो राधिकामधि वचनजातम् ।
जयति पद्मावतीरमणजयदेवकविभारतीभणितमतिशातम् ॥ प्रिये०॥९॥

परिहर कृतातङ्के शङ्कां त्वया सततं घन-
स्तनजघनयाक्रान्ते स्वान्ते परानवकाशिनि ।
विशति वितनोरन्यो धन्यो न कोऽपि ममान्तरं
प्रणयिनि परिरम्भारम्भे विधेहि विधेयताम् ॥ २ ॥

मुग्धे विधेहि मयि निर्दयदन्तदंश-
दोर्वल्लिबन्धनिबिडस्तनपीडनानि ।
चण्डि त्वमेव मुदमुद्वह पञ्चबाण-
चण्डालकाण्डदलनादसवः प्रयान्ति ॥३॥

व्यथयति वृथा मौनं तन्वि प्रपञ्चय पञ्चमं
तरुणि मधुरालापैस्तापं विनोदय दृष्टिभिः ।
सुमुखि विमुखीभावं तावद्विमुञ्च न वञ्चय
स्वयमतिशयस्निग्धो मुग्धे प्रियोऽहमुपस्थितः ॥ ४ ॥

शशिमुखि तव भाति भङ्गुरभ्रू-
युवजनमोहकरालकालसर्पी ।
तदुदितभयभञ्जनाय यूना
त्वदधरसीधुसुधैव सिद्धमन्त्रः ॥ ५ ॥

बन्धूकद्युतिबान्धवोऽयमधरः स्निग्धो मधूकच्छवि-
र्गण्डश्चण्डि चकास्ति नीलनलिनश्रीमोचनं लोचनम् ।
नासाभ्येति तिलप्रसूनपदवीं कुन्दाभदन्ति प्रिये
प्रायस्त्वन्मुखसेवया विजयते विश्वं स पुष्पायुधः ॥ ६ ॥

दृशौ तव मदालसे वदनमिन्दुसंदीपकं
गतिर्जनमनोरमा विजितरम्भमूरुद्वयम् ।
रतिस्तव कलावती रुचिरचित्रलेखे भ्रुवा-
वहो विबुधयौवतं वहसि तन्वि पृथ्वीगता ॥ ७ ॥

तिर्यक्कण्ठविलोलमौलितरलोत्तंसस्य वंशोच्चर-
द्गीतिस्थानकृतावधानललनालक्षैर्न संलक्षिताः ।
संमुग्धे मधुसूदनस्य मधुरे राधामुखेन्दौ सुधा-
सारे कन्दलिताश्चिरं दधतु वः क्षेमं कटाक्षोर्मयः ॥ ८ ॥

इति श्रीगीतगोविन्दे मानिनीवर्णने चतुरचतुर्भुजो नाम दशमः सर्गः ॥

## एकादशः सर्गः ॥

सुचिरमनुनयेन प्रीणयित्वा मृगाक्षीं
गतवति कृतवेशे केशवे कुञ्जशय्याम् ।
रचितरुचिरभूषां दृष्टिमोषे प्रदोषे
स्फुरति निरवसादां कापि राधां जगाद ॥ १ ॥

### प्रथमः प्रबन्धः ॥

वसन्तरागयतितालाभ्यां गीयते ॥

विरचितचाटुवचनरचनं चरणे रचितप्रणिपातम् ।
संप्रति मञ्जुलवञ्जुलसीमनि केलिशयनमनुयातम् ॥ १ ॥
मुग्धे मधुमथनमनुगतमनुसर राधिके ॥ ध्रुवम् ॥

शृणु रमणीयतरं तरुणीजनमोहनमधुपविरावम् ।
कुसुमशरासनशासनवन्दिनि पिकनिकरे भज भावम् ॥ मु० ॥ २ ॥
अनिलतरलकिसलयनिकरेण करेण लतानिकुरम्बम् ।
प्रेरणमिव करभोरु करोति गतिं प्रति मुञ्च विलम्बम् ॥ मु० ॥ ३ ॥
स्फुरितमनङ्गतरङ्गवशादिव सूचितहरिपरिरम्भम् ।
पृच्छ मनोहरहारविमलजलधारममुं कुचकुम्भम् ॥ मु० ॥ ४ ॥
स्मरशरसुभगनखेन करेण सखीमवलम्ब्य सलीलम् ।
चल वलयक्वणितैरवबोधय हरिमपि निगदितशीलम् ॥ मु० ॥ ५ ॥
अधिगतमखिलसखीभिरिदं तव वपुरपि रतिरणसज्जम् ।
चण्डि रणितरशनारवडिण्डिममभिसर सरसमलज्जम् ॥ मु० ॥ ६ ॥
घनजघनस्तनभारभरे दरमन्थरचरणविहारम् ।
मुखरितमणिमञ्जीरमुपैहि विधेहि मरालविकारम् ॥ मु० ॥ ७ ॥
श्रीजयदेवभणितमधरीकृतहारमुदासितवामम् ।
हरिविनिहितमनसामधितिष्ठतु कण्ठतटीमविरामम् ॥ मु० ॥ ८ ॥

सा मां द्रक्ष्यति वक्ष्यति स्मरकथां प्रत्यङ्गमालिङ्गनैः
प्रीतिं यास्यति रंस्यते सखि समागत्येति चिन्ताकुलः ।
स त्वां पश्यति वेपते पुलकयत्यानन्दति स्विद्यति
प्रत्युद्गच्छति मूर्च्छति स्थिरतमःपुञ्जे निकुञ्जे प्रियः ॥ २ ॥
अक्ष्णोर्निक्षिपदञ्जनं श्रवणयोस्तापिच्छगुच्छावलीं
मूर्ध्नि श्यामसरोजदाम कुचयोः कस्तूरिकापत्रकम् ।
धूर्तानामभिसारसम्भ्रमजुषां विष्वङ्निकुञ्जे सखि
ध्वान्तं नीलनिचोलचारु सुदृशां प्रत्यङ्गमालिङ्गति ॥ ३ ॥

काश्मीरगौरवपुषामभिसारिकाणामाबद्धरेखमभितो रुचिमञ्जरीभिः ।
एतत्तमालदलनीलतमं तमिस्रं तत्प्रेमहेमनिकषोपलतां तनोति ॥ ४ ॥

हारावलीतरलकाञ्चनकाञ्चिदामकेयूरकङ्कणमणिद्युतिदीपितस्य ।
द्वारे निकुञ्जनिलयस्य हरिं निरीक्ष्य व्रीडावतीमथ सखीमियमित्युवाच ॥ ५ ॥

शशिमुखि तव भाति भङ्गुरभ्रू-
र्युवजनमोहकरालकालसर्पी ।
तदुदितभयभञ्जनाय यूनां
त्वदधरसीधुसुधैव सिद्धमन्त्रः ॥ ५ ॥

बन्धूकद्युतिबान्धवोऽयमधरः स्निग्धो मधूकच्छवि-
र्गण्डश्चण्डि चकास्ति नीलनलिनश्रीमोचनं लोचनम् ।
नासाभ्येति तिलप्रसूनपदवीं कुन्दाभदन्ति प्रिये
प्रायस्त्वन्मुखसेवया विजयते विश्वं स पुष्पायुधः ॥ ६ ॥

दृशौ तव मदालसे वदनमिन्दुसंदीपकं
गतिर्जनमनोरमा विजितरम्भमूरुद्वयम् ।
रतिस्तव कलावती रुचिरचित्रलेखे भ्रुवा-
वहो विबुधयौवनं वहसि तन्वि पृथ्वीगता ॥ ७ ॥

तिर्यक्कण्ठविलोलमौलितरलोत्तंसस्य वंशोच्चर-
द्गीतिस्थानकृतावधानललनालक्षैर्न संलक्षिताः ।
संमुग्धे मधुसूदनस्य मधुरे राधामुखेन्दौ सुधा-
सारे कन्दलिताश्चिरं दधतु वः क्षेमं कटाक्षोर्मयः ॥ ८ ॥

इति श्रीगीतगोविन्दे मानिनीवर्णने चतुरचतुर्भुजो नाम दशमः सर्गः ॥

# एकादशः सर्गः ॥

सुचिरमनुनयेन प्रीणयित्वा मृगाक्षीं
गतवति कृतवेशे केशवे कुञ्जशय्याम् ।
रचितरुचिरभूषां दृष्टिमोषे प्रदोषे
स्फुरति निरवसादां कापि राधां जगाद ॥ १ ॥

प्रथमः प्रबंधः ॥

वसन्तरागयतितालाभ्यां गीयते ॥

विरचितचाटुवचनरचनं चरणे रचितप्रणिपातम् ।
संप्रति मञ्जुलवञ्जुलसीमनि केलिशयनमनुयातम् ॥ १ ॥
मुग्धे मधुमथनमनुगतमनुसर राधिके ॥ ध्रुवम् ॥

## तृतीयः प्रबन्धः ॥

### वराडीरागयतितालाभ्यां गीयते ॥

राधावदनविलोकनविकसितविविधविकारविभङ्गम् ।
जलनिधिमिव विधुमण्डलदर्शनतरलिततुङ्गतरङ्गम् ॥ १ ॥
हरिमेकरसं चिरमभिलषितविलासम् ।
सा ददर्श गुरुहर्षवशंवदवदनमनङ्गनिवासम् ॥ ध्रुवम् ॥
शशिकिरणच्छुरितोदरजलधरसुन्दरसकुसुमकेशम् ।
तिमिरोदितविधुमण्डलनिर्मलमलयजतिलकनिवेशम् ॥ हरि० ॥ २ ॥
वदनकमलपरिशीलनमिलितमिहिरसमकुण्डलशोभम् ।
स्मितरुचिरुचिरसमुल्लसिताधरपल्लवकृतरतिलोभम् ॥ हरि० ॥ ३ ॥
हारममलतरतारमुरसि दधतं परिरभ्य विदूरम् ।
स्फुटतरफेनकदम्बकरम्बितमिव यमुनाजलपूरम् ॥ हरि० ॥ ४ ॥
श्यामलमृदुलकलेवरमण्डलमधिगतगौरदुकूलम् ।
नीलनलिनमिव पीतपरागपटलभरवलयितमूलम् ॥ हरि० ॥ ५ ॥
तरलदृगञ्चलचलनमनोहरवदनजनितरतिरागम् ।
स्फुटकमलोदरखेलितखञ्जनयुगमिव शरदि तडागम् ॥ हरि० ॥ ६ ॥
विपुलपुलकभरदन्तुरितं रतिकेलिकलाभिरधीरम् ।
मणिगणकिरणसमूहसमुज्ज्वलभूषणसुभगशरीरम् ॥ हरि० ॥ ७ ॥
श्रीजयदेवभणितविभवद्विगुणीकृतभूषणभारम् ।
प्रणमत हृदि विनिधाय हरिं सुचिरं सुकृतोदयसारम् ॥ हरि० ॥ ८ ॥

अतिक्रम्यापाङ्गं श्रवणपथपर्यन्तगमन-
प्रयासेनेवाक्ष्णोरमलतरतारं गमितयोः ।
इदानीं राधायाः प्रियतमसमायातसमये
पपात स्वेदाम्बुप्रसर इव हर्षाश्रुनिकरः ॥ ८ ॥

भजन्त्यास्तल्पान्तं कृतकपटकण्डूतिपिहित-
स्मितं याते गेहाद्बहिरवहितालीपरिजने ।

## द्वितीयः प्रबंधः ॥

### वराडीरागरूपकतालाभ्यां गीयते ॥

मञ्जुतरकुञ्जतलकेलिसदने ।
विलस विमलसपीनजघने ।
प्रविश राधे माधवसमीपमिह ॥ ध्रुवम् ॥ ॥१॥

विततबहुवल्लिनवपल्लवघने ।
विलस दशनरुचिरचिरशिखरे ॥ प्रवि० ॥ २ ॥

मृदुचलमलयपवनसुरभिशीते ।
विलस रतिविरभसहसितवदने ॥ प्रवि० ॥ ३ ॥

मधुरतरपिकनिकरनिनदमुखरे ।
विलस रतिवलितललितगीते ॥ प्रवि० ॥ ४ ॥

कुसुमचयरचितशुचिवासगेहे ।
विलस कुसुमसुकुमारदेहे प्रवि० ॥ ५ ॥

मधुमुदितमधुपकुलकलितरावे ।
विलस कुसुमशरसरसभावे ॥ प्रवि० ॥ ६ ॥

नवभवदशोकदलशयनसारे ।
विलस कुचकलशतरलहारे ॥ प्रवि० ॥ ७ ॥

विहितपद्मावतीसुखसमाजे ।
कुरु मुरारे मङ्गलशतानि ॥
भणति जयदेवकविराजराजे ॥ प्रवि० ॥ ८ ॥

त्वां चित्तेन चिरं वहन्नयमतिश्रान्तो भृशं तापितः
कन्दर्पेण च पातुमिच्छति सुधासंबाधबिम्बाधरम् ॥
अस्याङ्कं तदलंकुरु क्षणमिह भ्रूक्षेपलक्ष्मीलव–
क्रीते दास इवोपसेवितपदाम्भोजे कुतः संभ्रमः ॥ ६ ॥

सा ससाध्वससानन्दं गोविन्दे लोललोचना ।
सिञ्जानमञ्जुमञ्जीरं प्रविवेशाभिवेशनम् ॥ ७ ॥

## तृतीयः प्रबन्धः ॥

### वराडीरागयतितालाभ्यां गीयते ॥

राधावदनविलोकनविकसितविविधविकारविभङ्गम् ।
जलनिधिमिव विधुमण्डलदर्शनतरलिततुङ्गतरङ्गम् ॥ १ ॥
हरिमेकरसं चिरमभिलषितविलासम् ।
सा ददर्श गुरुहर्षवशंवदवदनमनङ्गनिवासम् ॥ ध्रुवम् ॥

शशिकिरणच्छुरितोदरजलधरसुन्दरसकुसुमकेशम् ।
तिमिरोदितविधुमण्डलनिर्मलमलयजतिलकनिवेशम् ॥ हरि० ॥ २ ॥
वदनकमलपरिशीलनमिलितमिहिरसमकुण्डलशोभम् ।
स्मितरुचिरुचिरसमुल्लसिताधरपल्लवकृतरतिलोभम् ॥ हरि० ॥ ३ ॥
हारममलतरतारमुरसि दधतं परिरभ्य विदूरम् ।
स्फुटतरफेनकदम्बकरम्बितमिव यमुनाजलपूरम् ॥ हरि० ॥ ४ ॥
श्यामलमृदुलकलेवरमण्डलमधिगतगौरदुकूलम् ।
नीलनलिनमिव पीतपरागपटलभरवलयितमूलम् ॥ हरि० ॥ ५ ॥
तरलदृगञ्चलचलनमनोहरवदनजनितरतिरागम् ।
स्फुटकमलोदरखेलितखञ्जनयुगमिव शरदि तडागम् ॥ हरि० ॥ ६ ॥
विपुलपुलकभरदन्तुरितं रतिकेलिकलाभिरधीरम् ।
मणिगणकिरणसमूहसमुज्ज्वलभूषणसुभगशरीरम् ॥ हरि० ॥ ७ ॥
श्रीजयदेवभणितविभवद्विगुणीकृतभूषणभारम् ।
प्रणमत हृदि विनिधाय हरिं सुचिरं सुकृतोदयसारम् ॥ हरि० ॥ ८ ॥

अतिक्रम्यापाङ्गं श्रवणपथपर्यन्तगमन-
प्रयासेनेवाक्ष्णोरमलतरतारं गमितयोः ।
इदानीं राधायाः प्रियतमसमायातसमये
पपात स्वेदाम्बुप्रसर इव हर्षाश्रुनिकरः ॥ ८ ॥

भजन्त्यास्तल्पान्तं कृतकपटकण्डूतिपिहित-
स्मितं याते गेहाद्बहिरवहितालीपरिजने ।

प्रियास्य पश्यन्त्याः स्मरशराकूतसुभग
गवज्जा लज्जापि व्यगमदिव दूरं मृगदृशः ॥ ९ ॥

त्वामप्राप्य मयि स्वयंवरपरां क्षीरोदतीरोदरे
शङ्के सुन्दरि कालकूटमपिबन्मूढो मृडानीपतिः ।
इत्थं पूर्वकथाभिरन्यमनसो विक्षिप्य वामाञ्चलं
राधायाः स्तनकोरकोपरि चलन्नेत्रो हरिः पातु वः ॥ १० ॥

इति श्रीगीतगोविन्दे राधिकामिलने सानन्ददामोदरो नामैकादशः सर्गः ॥

## ॥ द्वादशः सर्गः ॥

गतवति सखीवृन्देऽमन्दत्रपाभरनिर्भर-
स्मरपरवशाकूतस्फीतस्मितस्नपिताधराम् ।
सरसमनसं दृष्ट्वा राधां मुहुर्नवपल्लव-
प्रसवशयने निक्षिप्ताक्षीमुवाच हरिः प्रियाम् ॥ १ ॥

### प्रथमः प्रबंधः ॥

### विभासरागैकतालाभ्यां गीयते ॥

किसलयशयनतले कुरु कामिनि चरणनलिनविनिवेशम् ।
तव पदपल्लववैरिपराभवमिदमनुभवतु सुवेशम् ॥ १ ॥
क्षणमधुना नारायणमनुगतमनुसर मां राधिके ॥ ध्रुवम् ॥
करकमलेन करोमि चरणमहमागमितासि विदूरम् ।
क्षणमुपकुरु शयनोपरि मामिव नूपुरमनुगतिशूरम् ॥ क्षण० ॥ २ ॥
वदनसुधानिधिगलितममृतमिव रचय वचनमनुकूलम्
विरहमिवापनयामि पयोधररोधकमुरसि दुकूलम् ॥ क्षण० ॥ ३ ॥
प्रियपरिरम्भणरभसवलितमिव पुलकितमतिदुरवापम् ।
मदुरसि कुचकलशं विनिवेशय शोषय मनसिजतापम् ॥ क्षण० ॥ ४ ॥
अधरसुधारसमुपनय भामिनि जीवय मृतमिव दासम् ।
त्वयि विनिहितमनसं विरहानलदग्धवपुषमविलासम् ॥ क्षण० ॥ ५ ॥

शिमुखि मुखरय मणिरशनागुणमनुगुणकण्ठनिनादम् ।
श्रुतियुगले पिकरुतविकले मम शमय चिरादवसादम् ॥ क्षण० ॥६॥
मामतिविफलरुषा विकलीकृतमवलोकितमधुनेदम् ।
लज्जितमिव नयनं तव विरमति सृजसि वृथा रतिखेदम् ॥क्षण०॥७॥
श्रीजयदेवभणितमिदमनुपदनिगदितमधुरिपुमोदम् ।
जनयतु रसिकजनेषु मनोरमरतिरसभावविनोदम् ॥ क्षण० ॥ ८ ॥

प्रत्यूहः पुलकाङ्कुरेण निबिडाश्लेषे निमेषेण च
क्रीडाकूतविलोकितेऽधरसुधापाने कथानर्मभिः ।
आनन्दाधिगमेन मन्मथकलायुद्धेऽपि यस्मिन्नभू-
दुद्भूतः स तयोर्बभूव सुरतारम्भः प्रियंभावुकः ॥ २ ॥

दोर्भ्यां संयमितः पयोधरभरेणापीडितः पाणिजै-
राविद्धो दशनैः क्षताधरपुटः श्रोणीतटेनाहतः ।
हस्तेनानमितः कचेऽधरमधुस्यन्देन संमोहितः
कान्तः कामपि तृप्तिमाप तदहो कामस्य वामा गतिः ॥ ३ ॥

माराङ्के रतिकेलिसंकुलरणारम्भे तया साहस-
प्रायं कान्तजयाय किंचिदुपरि प्रारम्भि यत्संभ्रमात् ।
निष्पन्दा जघनस्थली शिथिलिता दोर्वल्लिरुत्कम्पितं
वक्षो मीलितमक्षि पौरुषरसः स्त्रीणां कुतः सिध्यति ॥ ४ ॥

ईषन्मीलितदृष्टि मुग्धविलसत्सीत्कारधारावशा-
दव्यक्ताकुलकेलिकाकुविकसद्दन्तांशुधौताधरम् ।
श्वासोत्कम्पिपयोधरोपरि परिष्वङ्गात्कुरङ्गीदृशो
हर्षोत्कर्षविमुक्तिनिःसहतनोर्धन्यो धयत्याननम् ॥ ५ ॥

तस्याः पाटलपाणिजाङ्कितमुरो निद्राकषाये दृशौ
निर्धौतोऽधरशोणिमा विलुलितस्रस्तस्रजो मूर्धजाः ।
काञ्चीदाम दरश्लथाञ्चलमिति प्रातर्निखातैर्दृशो-
रेभिः कामशरैस्तदद्भुतमभूत्पत्युर्मनः कीलितम् ॥ ६ ॥

व्याकोशः केशपाशस्तरलितमलकैः स्वेदमोक्षौ कपोलौ
क्लिष्टा बिम्बाधरश्रीः कुचकलशरुचा हारिता हारयष्टिः ।
काञ्चीकान्तिर्हताशा स्तनजघनपदं पाणिनाच्छाद्य सद्यः
पश्यन्ती चात्मरूपं तदपि विलुलितस्रग्धरेयं धिनोति ॥७॥

अथ सहसा सुप्रीतं सुरतान्ते सा नितान्तखिन्नाङ्गी ।
राधा जगाद सादरमिदमानन्देन गोविन्दम् ॥८॥

## द्वितीयः प्रबन्धः ॥

### रामकरीरागयतितालाभ्यां गीयते ॥

कुरु यदुनन्दन चन्दनशिशिरतरेण करेण पयोधरे ।
मृगमदपत्रकमत्र मनोभवमङ्गलकलशसहोदरे ॥ १ ॥
निजगाद सा यदुनन्दने क्रीडति हृदयानन्दने ॥ ध्रुवम् ॥
अलिकुलगञ्जनमञ्जनकं रतिनायकसायकमोचने ।
त्वदधरचुम्बनलम्बितकज्जलमुज्ज्वलय प्रिय लोचने ॥ निज०॥ २॥
नयनकुरङ्गतरङ्गविकासनिरासकरे श्रुतिमण्डले ।
मनसिजपाशविलासधरे शुभवेश निवेशय कुण्डले ॥ निज० ॥ ३ ॥
मृगमदरसवलितं ललितं कुरु तिलकमलिकरजनीकरे ।
विहितकलङ्ककलं कमलानन विश्रमितश्रमशीकरे ॥ निज० ॥ ४ ॥
भ्रमरचयं रचयन्तमुपरि रुचिरं सुचिरं मम सम्मुखे ।
जितकमले विमले परिकर्मय नर्मजनकमलकं मुखे ॥ निज० ॥ ५ ॥
मम रुचिरे चिकुरे कुरु मानद मनसिजध्वजचामरे ।
रतिगलिते ललिते कुसुमानि शिखण्डिशिखण्डकडामरे ॥ निज० ॥ ६ ॥
सरसघने जघने मम शम्बरदारणवारणकन्दरे ।
मणिरशनावसनाभरणानि शुभाशय वासय सुन्दरे ॥ निज० ॥ ७ ॥
श्रीजयदेववचसि रुचिरे हृदयं सदयं कुरु मण्डने ।
हरिचरणस्मरणामृतनिर्मितकलिकलुषज्वरखण्डने ॥ निज० ॥ ८ ॥

कुरु कुचयोः पत्रं चित्रं कुरुष्व कपोलयो-
र्घटय जघने काञ्चीं मुग्धस्रजा कबरीभरम् ।
कलय वलयश्रेणीं पाणौ पदे मणिनूपुरा-
विति निगदितः प्रीतः पीताम्बरोऽपि तथाकरोत् ॥ ९ ॥

प्रातर्नीलनिचोलमच्युतमुरः संवीतपीताम्बरं
राधायाश्चकितं विलोक्य हसति स्वैरं सखीमण्डले ।
व्रीडाचञ्चलमञ्चलं नयनयोराधाय राधानने
स्वादुस्मेरमुखोऽयमस्तु जगदानन्दाय नन्दात्मजः ॥ १० ॥

पर्यङ्कीकृतनागनायकफणाश्रेणीमणीनां गणे
सङ्क्रान्तप्रतिबिम्बसंवलनया बिभ्रद्वपुर्विक्रियाम् ।
पादाम्भोरुहधारिवारिधिसुतामक्ष्णां दिदृक्षुः शतैः
कायव्यूहमिवाचरन्नुपचितीभूतो हरिः पातु वः ॥ ११ ॥

इति श्रीजयदेवविरचिते गीतगोविन्दे सुप्रीतपीताम्बरो नाम द्वादशः सर्गः ॥

## प्रशस्तिः ॥

यद्गान्धर्वकलासु कौशलमनुध्यानं च यद्वैष्णवं
यच्छृङ्गारविवेकतत्त्वमपि यत्काव्येषु लीलायितम् ।
तत्सर्वं जयदेवपण्डितकवेः कृष्णैकतानात्मनः
सानन्दाः परिशोधयन्तु सुधियः श्रीगीतगोविन्दतः ॥ १ ॥

साध्वी माध्वीकचिन्ता न भवति भवतः शर्करे कर्कशासि
द्राक्षे द्रक्ष्यन्ति के त्वाममृत मृतमसि क्षीर नीरं रसस्ते ।
माकन्द क्रन्द कान्ताधर धरणितलं गच्छ यच्छन्ति भावं
यावच्छृङ्गारसारं शुभमिव जयदेवस्य वैदग्ध्यवाचः ॥ २ ॥

श्रीभोजदेवप्रभवस्य रामादेवीसुतश्रीजयदेवकस्य ।
पराशरादिप्रियवर्गकण्ठे श्रीगीतगोविन्दकवित्वमस्तु ॥ ३ ॥

इति श्रीजयदेवविरचिते गीतगोविन्दे प्रशस्तिः ॥

समाप्तं चेदं काव्यम् ॥

# शुद्धिपत्रम् ॥

| पृष्ट. | पक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| १. | ७. | निदेशतश्चलि० | निदेशतश्चलि० |
| २. | १२. | घृतवामन० | धृतवामन० |
| | १८. | घृतराम० | धृतराम० |
| ४. | ९. | दनद्वखेद० | दनद्वखेद० |
| ५. | २. | वृदावन० | वृन्दावन० |
| | ८. | गुन्धवाहः | गन्धवाहः |
| ६. | २१. | ऽक्रेशकेशवो | सामोददामोदरो |
| ७. | १. | लताकुञ्जे | लताकुञ्जे |
| ८. | ५. | केशीमथन० | केशिमथन० |
| ९. | १. | त्रेलोक्य० | त्रैलोक्य० |
| | ५. | गीतगोविन्दे | गीतगोविन्दे |
| | २१. | परिरम्भण | परिरम्भण |
| ११. | ११. | मनासिजविशिख० | मनसिजविशिख० |
| १२. | १५. | सार्धं | सार्धं |
| १५. | १९. | आश्लेषादनु | आश्लेषादनु |
| १७. | ७. | स्तव | स्तव |
| | १३. | भोगिभवने | भोगिभवने |
| २०. | ९. | मणिसरममल | मणिसरममल |
| २१. | २. | वशीरवः | वशीरवः |
| | ३. | ०वर्णन | ०वर्णने |
| २३. | २. | ०भरुणद्योति | ०मरुणद्योति |
| | १७. | ध्रुवम् | ध्रुवम् |
| २४. | ४. | हृदय० | हृदय० |
| | १३. | वदसि, कौमुदीं | वदसि, कौमुदी |

| पृष्ठ. | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| २५. | १३. | राधिका० | राधिका० |
| २७. | १८. | तम पुज्जे | तम.पुञ्जे |
| | २४. | ०दलनीतलम | ०दलनीलतम |
| २९ | १६. | खेलितम्वञ्जन० | खेलितखञ्जन० |
| ३०. | १६. | अनुमवतु | अनुमवतु |
| ३१. | १६. | दुत्रत. | दुर्न्नत. |
| ३२. | ९ | चन्दनशिशिश० | चन्दनशिशिर० |
| | १८. | समुखे | समुखे |

"અનુવાદ"

| | | | |
|---|---|---|---|
| १ | | સુહાવે ઉરમંદિર તે, | સુહાય એ ઉરમંદિરે; |
| २ | २० | અદ્ભૂત | અદ્ભુત |
| ३ | २३ | १२ | ५ |
| ४ | १२ | સૂયથી | સૂર્યથી |
| ५ | २२ | પર . | પૂરે |
| | १४ | મનોકામના. | મનોકામના. ६ |
| ८ | १६ | ઝૂરે | મૂરે |
| | २१ | કેજ | કેંજ |
| ९ | १८ | સુદર | સુંદર. |
| १० | ४ | અદ્ભૂત | અદ્ભુત |
| १५ | २४ | સુલોચન | સુ લોચન |
| १६ | २२ | સુલભ્ય | સુંલભ્ય |
| १७ | ९ | શોધે છે | શોધે છે |
| २० | ५ | સુવૃત. | સુવૃત્ત |
| २१ | १३ | विरहे. | विरहे |
| | १४ | विनवे . | विनवे |
| २२ | ४ | અલૂમજ | અલગજ |
| | ८ | આમ્ર-મજરી | આમ્ર-મંજરી |

| પાન. | પંક્તિ | અશુદ્ધ | શુદ્ધ. |
| --- | --- | --- | --- |
| ૨૪ | ૨ | તન્વાંગી | તન્વંગી |
| ૨૫ | ૪ | ગોપીકાઓ | ગોપિકાઓ |
| ૨૮ | ૧૮ | ઘડી ઘડી | ઘડીં ઘડીં |
| ૨૯ | ૧૦ | સુમુખી ! | સુમુખિ ! |
| | ૧૮ | સિંદુરે | સિંદૂરે |
| | | ચર્ર્યો | ચર્ચ્યો |
| ૩૭ | ૩ | સુરભિએ | સુરખિએ |
| ૪૦ | ૭ | કૃપાધાન | કૃપાધન |
| ૪૨ | ૧૩ | એવડા | એવડે |
| | ૨૧ | ખંડીતા | ખંડિતા |
| ૪૩ | ૧૦ | પશ્ચાતાપ | પશ્ચાત્તાપ |
| | ૧૭ | અનુકુળ | અનુકૂળ |
| ૪૭ | ૩ | મખિ ! | સખિ ! |
| ૪૯ | ૩ | શુશીલ ! | સુશીલ ! |
| ૫૩ | ૨૦ | પ્રેમ-પુંપે | પ્રાણ-પુષ્પે |
| ૫૫ | ૧૩ | શિર્ષે | શીર્ષે |
| ૫૭ | ૨૧ | ઉર્મિએ | ઊર્મિએ |
| ૬૩ | ૩ | ઓષ્ટ | ઓષ્ઠ |
| ૬૪ | ૧૪ | ઓષ્ટે | ઓષ્ઠે |
| ૬૬ | ૧૧ | નીર નું | નીર નું |



સરળ

# ગીતગોવિંદ.

## પ્રસ્તાવના.

( શાર્દૂલવિક્રીડિત. )

મેઘે આભ છવાયું, શ્યામ વનભૂ છાઈ તમાલે અતિ;
આ રાત્રિ-બીકું કૃષ્ણ ઘેર લઈ જા રાધેય તું સાચવી.
ચાલ્યાં વેણથી નંદના વિજન કે કુંજે દ્રુમે માર્ગની-
લીલા જે યમુના-તટે યુગલની થૈ, તે સ્મરૂં રાજવી. ૧

( હરિગીત )

સમૃદ્ધિ સર્વ સરસ્વતીની સુહાવે ઉર-મંદિર એ;
પદ્માવતીના નૃત્યભર સંગીતથી દિવ્ય જ દીસે;
કવિરાજ શ્રીજયદેવ એ વર્ણે પ્રબંધ મુદા રચી,
શ્રીવાસુદેવ તણી કથા સુરત-ક્રીડાએ સોહતી. ૨

( દ્રુતવિલંબિત. )

રસ ધરે હરિના સ્મરણે મન;
રતિકથા શ્રવણે ઉછળે ઉર;
શ્રવણ તો ધર તું જયદેવનાં
કવન કોમલ કાન્ત મધુર આ. ૩

( શાર્દૂલવિક્રીડિત. )

પંડિતાઈ ઉમાપતિધર કરે આડંબરી વાણીએ;
જે કે શીઘ્રજ શરણ ક્રૂટ કવિતા; ધોયી કવિરાજ કે';
શૃંગારોત્તમ સુકવિત રચતા આચાર્ય ગોવર્ધન;
રે ! ગિરા જયદેવની જ ઝરતી સંદર્ભની માધુરી. ૪

## પ્રબંધ પહેલો.

(રાગઃ—અષ્ટસપ્ત ચોકો, તાલ રૂપક.[1])

પ્રલય—પયોધિ—જળ ઉછળ્યાં ત્હેં તાર્યો વેદ સુસ્હેલ રે,
નાવડી કેરાં કારજ સાર્યાં: કેશવ મત્સ્ય—સ્વરૂપઃ
જય જગદીશ હરે. ૧

ધરણી ધર્યે પડયાં આંટણ લોહિત ભવ્ય પીઠે ત્હેં ધાર્યું રે,
ચૌદ ભુવન બ્રહ્માંડ અખિલ ત્હેં: કેશવ કચ્છપરૂપઃ
જય જગદીશ હરે. ૨

શશીમાં મગ્ન કલંક—કલા ત્યમ દંત—શિખરરહી લાગી રે,
ઉદ્ધારી ધરણી ત્હેં ડુબંતીઃ કેશવ સૂકર—સ્વરૂપઃ
જય જગદીશ હરે. ૩

હિરણ્યકશિપુ—તન ભ્રમર શું લ્હીને ક્હેં દીં વિદાર્યો અસુરરે,
કર—કમલે નખ અદ્‌ભૂત તીણઃ કેશવ નૃસિંહ—સ્વરૂપઃ
જય જગદીશ હરે. ૪

અદ્‌ભૂત બટુ બની બળિયા બલિને છળીઓ ત્હેં ત્રણ ડગમાં રે,
કીધ પાવન જન પદ—નખ—નીરથીઃ કેશવ વામનરૂપઃ
જય જગદીશ હરે. ૫

---

[1] "દક્ષિણમાં છે દૂસલગંગા ત્યાંથી નિકળીએ પ્રવાસ રે." એ રાગમાં ગાઈ શકાય છે.

પાપનિવારક ભવદુઃખ—ટાળક સ્નાન કરાવ્યાં કુંડે રે,
ક્ષત્રિય—રુધિર રૂપી જળે ભરીઆઃ કેશવ ભાર્ગવ—રૂપઃ
જય જગદીશ હરે. ૬

મનગમતા મનહર બલિ આપી દિક્‌પતિ દશ સંતોષ્યા રે,
રણ—યજ્ઞે રાવણ—શિર વેરીઃ કેશવ રાઘવ—રૂપઃ
જય જગદીશ હરે. ૭

મેઘશ્યામ પટકૂળ શ્વેતાંગે સોહે—શું યમુના ય રે,
આવી મળી હળ—મારણ—ભયથીઃ કેશવ હળધર—રૂપઃ
જય જગદીશ હરે. ૮

પશુઘાત બોધતાં વેદ—વચન ત્હેં યજ્ઞવિધિનાં નિંદ્યાં રે;
સદય હૃદય હિંસા અટકાવીઃ કેશવ બુધ્ધ—સ્વરૂપઃ
જય જગદીશ હરે. ૯

મ્લેચ્છ—વૃંદ નિર્મૂળ કરવે તું ધારીશ ખડ્ગ કુટિલ રે
ધૂમકેતુ શું વિકટ ભયંકરઃ કેશવ કલ્કિ—સ્વરૂપઃ
જય જગદીશ હરે. ૧૦

શ્રવણો શ્રીજયદેવ—સ્તુતિ સૌ શુભદાયક સુખદાયક રે,
ભાવ ભરી, ભવસાર ભરી જ આઃ કેશવ દશવિધ—રૂપઃ
જય જગદીશ હરે. ૧૧

( શાર્દૂલવિક્રીડિત. )

તાર્યા વેદ; ધર્યું પીઠે જગત ત્હેં; તારી મહી ડુબતી;
માર્યો દૈત્ય; છળ્યો બલિ; પણ ધરી નક્ષત્રી કીધી મહી;
રોળ્યો રાવણ, ને હળે ય યમુના; દીક્ષા દયાની દીધી,
મારે મ્લેચ્છ,—ધરી સ્વરૂપ દશ તું: શ્રીકૃષ્ણ તુંને નમું. ૧૨

## પ્રબંધ બીજો.

(રાગ ગરબાનો.[1])

રમે રાધાકૃષ્ણ સજોડઃ જય જય દેવ હરે!
અદ્વૈત જ અંગ ભીડેય· જય જય દેવ હરે! ધ્રુવ.

એક હસ્ત કમળા—કુચ ધર્યો, બીજે કંઠ સુહાયરે;
કંઠ· લલિત વનમાળ વિરાજે, કાને સોહે કુંડલ.
જય જય૦ ૧

સૂર્ય—મંડળ સુહાવે સુંદર, પ્રલય કરે તું જગને રે;
મુનિ—જનના મન—માનસ—સરમાં વિહરે તું થઇ હંસ.
જય જય૦ ૨

કાલિય—વિષધર કનડ્યો કાઢ્યો, તાપ ટળ્યા જનરંજ્યારે;
વિકસાવ્યું યાદવકુળ ઉજ્વળ, સૂર્યથી જેમ સરોજ.
જય જય૦ ૩

મધુ સુર નરક અસુર સંહાર્યા, ગરૂડાસન્ન ગવાય રે,
સુર—કુલ ખેલે કેલિ—ક્રીડા ત્યાં આદિ કારણ આપ.
જય જય૦ ૪

લાસે લોચન અમલ કમલ શું; ભવ તારીય દે મોક્ષ રે;
ચૌદ ભુવન બ્રહ્માંડ સરજવે એક જ તુંહી એક.
જય જય૦ ૫

જનક—સુતા સીતા સોહાવ્યાં, સોહ્યા સીતા સાહી રે;
દૂષણ દૈત્ય વિદાર્યો; દશગ્રીવ રણ રોળ્યો રાવણ.
જય જય૦ ૬

---

1. "મ્હારા વ્હાલાની વન માલ વાગે રૂડી વાસળી."—એ રાગમાં.

જળ ભરીઆ નવલા જળધર શુ સુંદર શોભે શરીર રે;
અંદર ધરીં કર્યું સાગર-મંથનઃ શ્રીમુખ-ચંદ્ર-ચકોર.
જય જય૦ ૯

શરણોત્તમ! શરણે તુજ આવ્યા, નમીએ ભાવ ધરીય રે;
સત્કારો શરણાગત કેશવ! કરીએ કુશળ કૃપાળ!
જય જય૦ ૮

શ્રીજયદેવ કવિએ ગાયું મંગળ આ ગીત ઉજ્જ્વળ રે;
ગાય શીખે ને સાંભળે તેનાં મોદે મન અમાપ.
જય જય૦ ૯

( શાર્દૂલવિક્રીડિત, )

શ્રી-કુચાગ્રે ઘટેલ કેસર વડે મુદ્રાયું જે ભેટવે;
ને જ્યાં રંગી અનંગ; જ્યાં શ્રમ ચઢયે પ્રસ્વેદનાં પૂર વ્હે;
ને જ્યાં આંતર રાગ વ્યકત કરતી મુદ્રા શ્રીએ દીધ આ-
તે તે ઉર મધુરિપુ તણું પુરો સૌની મનોકામના.

इति श्रीजयदेवकविविरचिते गीतगोविन्दे प्रस्तावना।



# સરળ
# ગીતગોવિંદ.
## સર્ગ પહેલો.

વસ્તુ:—વસંત ઋતુનો ઉદય થતાં વિહ્વળ બનેલાં રાધિકાજી નંદ-નંદન શ્રીકૃષ્ણને વૃંદાવનની કુંજોમાં શોધતાં અહીં તહીં ભાન-શૂન્ય ફરે છે, તેવામાં કોઈક સંયોગ-રસિક સખી તેમની જ ચિંતાએ તેમને ઢુંઢતી ત્યાં આવી પહોંચે છે, અને તેમની મિલનોત્કંઠામાં ઉમેરણા કરતી કહે છે કે:–"બ્હેન જો તો ખરી! આ ઋતુરાણીના રાજ્યમાં વૃંદાવન કેવું રળિયામણું બન્યું છે! અને આ પ્રભુ કૃષ્ણજી તો જો-પણે પેલી ગોપીઓના વૃંદમાં કેવી ક્રીડા કરે છે! રાસેશ્વરી! આમ ભાનશૂન્ય કાં ફરે છે? જરા જો આ રસ-સામગ્રી અને રસેશ્વર કૃષ્ણ!"

( શિખરિણી. )

વસંતે વાસંતી-કુસુમ સમ કુળાં અવયવે
ભમે ઘેલી ભામા ભીષણ વન શોધંતી હરિને;
અનંગે આગી, થૈ ચટપટી ચિતે-રોકી ઘટી ના;
તદા જૈ રાધાને સહચરી કહે છે સરસ આ. ૧

### પ્રબંધ પહેલો.

(રાગ: ગૌડ મારંગ-હોજી, તાલ ઝોકની લાવણી, માત્રા ૮:[૧])

ઋતુરાણી રસિક રઢિયાળી, ખીલી આ વસંતઃ આરત ન્યારી. ધ્રુવ.

---

૧ "પચરંગી પટકૂળ ધારી, ખીલી આ વસંત આ રને ન્યારી."—એ રાગમાં ગવાય છે.

